॥ श्रीशंकर ॥

रत्नैः कल्पित मानसं हिमजलैः
स्नानं च दिव्याम्बरं॥ नानारत्न विभूषणं
मृगमदामोदाङ्कितं चन्दनम् । जाती
चम्पक बिल्व पत्र रचितं पुष्पं च धूप
स्तथा॥ दीपोदेव दयानिधे पशुपते
हृत्कल्पितो गृह्यताम् ॥ सौवर्णे माणि
खण्ड रत्न रचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं
मानसम् । शाकानामयुतं जलं रुचिकरं
कर्पूरखण्डोज्ज्वलं । ताम्बूलं मनसा मया
विरचितं भक्त्या प्रभो स्वीकुरु । छत्रं
चामरयोर्युगं व्यजनकं चादर्शनं निर्मलं
वीणाभेरिमृदङ्गकाहलकलागीतं च नृत्यं
तथा । साष्टाङ्ग प्रणतिः स्तुतिर्बहुविधा
एतत्समस्तं मया । सङ्कल्पेन समर्पितं
तव विभो पूजां गृहाण प्रभो

आत्मा त्वं गिरिजा मतिः सहचराः
प्राणाः शरीरं गृहं। पूजा ते विषयोप-
भोग रचना। निद्रा समाधिस्थितिः
संचारः पदयोः प्रदक्षिण विधिः
स्तोत्राणि सर्वा गिरो। यद्यत्कर्म करोमि
तत्तदखिलं। शंभो तवाराधनम्

करचरण कृतं वाक्कजं वा —
श्रवणनयनजं वा। मानसं वापराधम्
विहितमविहितं वा। सर्वमेतत्क्षमस्व —
जय जय करुणाब्धे श्री महादेव शंभो

(५) भोजन समये देवतास्मरणम् —
अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः
एवं ध्यात्वा तु यो भुङ्क्ते सोऽन्न दोषैर्न लिप्यते
अहं वैश्वानरो भूत्वा प्राणिनां देहमा—
श्रितः। प्राणापान समायुक्तः पचाम्यन्नं
चतुर्विधम्। अगस्तिर्भोजनो येन-वाता
पिश्च महाबलः। आग स्वं कुम्भकर्णं
च शनिं च वडवानलम्। आहारपा-
कार्थं स्मरामि च वृकोदरम्

दीपवन्दनम् —
शुभं करोतु कल्याणमारोग्यं धनसंपदः
शत्रुबुद्धि विनाशाय दीपज्योतिर्नमोऽस्तु ते

निद्रा समये देवतास्मरणम्
अगस्त्यो माधवश्चैव मुचुकुन्दो महा
मुनिः। कपिलो मुनिरास्तीकः पञ्चैते
सुखशायिनः। कर्कोटकस्य या भार्या
दाहिनी मोहिनी सती। तासां स्मरण
मात्रेण चौरो गच्छति निष्फलः
जले रक्षतु नन्दीशः स्थले रक्षतु भैरवः
अरण्ये वीर भद्रश्च सर्वतः पातु शंकरः
जले रक्षतु वाराहः स्थले रक्षतु वामनः
अरण्ये नारसिंहश्च सर्वतः पातु केशवः

श्री साम्बसदाशिवार्पणमस्तु —
हरेश्वरः हरिः स्वतः हरिः

शास्त्राभ्यास नको श्रुती पढु नको ।
तीर्थासि जाऊ नको । योगाभ्यास
नको व्रत मखनको तीव्रे तपे ती नको ।
काळाचे भय मानसी धरु नको दुष्टासि
शंकू नको । ज्याचीया स्मरणे पतीत
तरती तो शंभु सोडू नको ॥४॥

अभंग

घटका गेली पळे गेली तास वाजे झणाणा ।
आयुष्याचा नाश होतो राम कां रे म्हणाना ॥ धृ ॥
एक प्रहर, दोन प्रहर, तीन प्रहर गेले । विषयांच्या
संगे चापा चारी प्रहर गेले ॥ धृ ॥ १ ॥
झोप कांहीं राग कांहीं स्त्री संगे गेली । ऐशी
आठ प्रहरांची वासलात झाली ॥ घटका० ॥ २ ॥
दास म्हणे तास वाजे सकळा स्मरण देतो । वेळोवेळा
राम म्हणा म्हणुनी झणकारितो ॥ घटका० ॥ ३ ॥

---

इच्छा करावी परमेश्वराची ।
निराशा धरावी इतरे जनांची ॥
नाहीच दिल्हे परमेश्वराने ।
तें काय द्यावे इतरा जनानें ॥